# बालकथाः



V. P. BOKIL, M. A., S. T. C. D.,
LECTURER IN EDUCATION, S. T. COLLEGE, BOMBAY.







...ATAK PUBLISHING HOUSE,
...HIRA BAZAR, BOMBAY 2.

# बालकथाः








V. P. BOKIL, M. A., S. T. C. D.
LECTURER IN EDUCATION, S. T. COLLEGE, BOMBAY.



KARNATAK PUBLISHING HOUSE,
CHIRA BAZAR, BOMBAY 2.
1936.

Price 0-4-0



# Introduction.

Children like stories and, particularly, stories about children. Therefore, I have great pleasure in presenting these ten stories o Indian children, most of which were told by me at home to ny own children–Venkatesha and Indumati–in Marathi. I am very thankful to Dr. W. H. D. Rouse, M. A., of Cambridge for ıaving encouraged me to write these stories. I must express ny gratitude to the different authors, from whose writings I picked up ideas for some of these stories. My thanks are also lue to Mr. S. R. Bhat, M. A., B. T., Prof. V. A. Gadgil, M. A., and Pandit Bhargav Shastri Joshi, for having read the manuscript ınd made useful suggestions.

This booklet is intended to be a supplementary Reader for Sanskrit pupils in standards IV & V, who are now expected to do some rapid reading even in Sanskrit.

14th January,
1936.

V. P. BOKIL.

## Prefatory Note.

I have the pleasant duty of teaching Sanskrit to the Indian Civil Students in Cambridge; and I have always been dissatisfied with the books we had to use, because they are devised so as to practise the grammar but have no relation at all to daily life, and *a language is not learnt unless it can be spoken in natural surroundings.* Having spent my life in devising a way of teaching Latin and Greek from this point of view, I was delighted by finding that Professor Bokil had done the same for Sanskrit, and that his work was gaining the success it deserved in India. I used his book here with those who were beginning Sanskrit, and I found that however much they forgot of what they learnt from other books, they never forgot what they learnt from his.

I had tried myself to write such a book, but I soon found that it was useless unless one knew Indian life from the inside. I had even chosen the name Govinda for my boy! But no Englishman can do it, even if he has lived as a child in India, as I have myself; no one but an Indian, to whom the scenes are his natural home. And the scenes pleased me even more than the scholastic value of the book. We see here the Indian children as they are, their ways of living and thinking, their pleasures and sports. There is plenty of mischief in them, as in all human children, and we do not like them any the less for that; but I was struck by their charming manners, and above all, by the simple piety which their parents teach them. It is clear that we worship the same God under different names. It seemed to me that this unpretending book could teach something to English Civil Students which they could not learn elsewhere.

I described Professor Bokil's book in an article which was published by the *Contemporary Review* in January 1933. This excited some interest outside school circles; and I ventured to suggest to the author that he might compose a few more scenes. This he has done, and the result is before you. I hope we may have them all published in English and made accessible to the people of England, to whom the interests of India are so profoundly important.

W. H. D. ROUSE.

# धर्मभावना।

आसीत् सप्तपुर्यां गोविन्दो नाम द्वादशवर्षदेशीयः कोऽपि ब्राह्मण-पुत्रः। स प्रतिदिनं पाठशालामगच्छत्। परं न कदापि सावधानं तेन पाठाः श्रुताः। गुरुवाक्यं नानुष्ठितम्। विद्यार्जने न यत्नः कृतो वा। अथ संवत्सरान्ते परीक्षासमये प्रश्नानामुत्तराणि यथार्थं लेखितुं नासौ समर्थः। तेन चिन्तापरः सन् परीक्षायशः केनाप्युपायेन सम्पादयितुं दिनान्तरे गिरिमूलस्थं श्रीगणेशालयं प्रति गच्छन् स मार्गे केनचित् सहाध्यायिना दृष्टः।

**प्रभाकरः**—भो वयस्य, नमस्ते। कुत्र गम्यतेऽधुना।

**गोविन्दः**—न कुत्रापि निश्चयेन। इतस्ततो भ्रम्यते निर्हेतुकम्।

**प्रभाकरः**—खिन्नं दृश्यते तव वदनम्। हस्तपुटे पुष्पमालाऽपि ते वर्तते। को वाऽस्याभिप्रायः। किमर्थं वा प्रतारणेयम्। अयि गोविन्द निवेदय मे निजमनोरथम्। वयस्यो नाम विश्वास-भाजनम्। तस्य पुरतः खलु मानसं प्रकटीकर्तव्यम्। अहं तव साहाय्यं करिष्यामि यथाशक्ति।

**गोविन्दः**—[साश्रुलोचनम्] अयि भो प्रभाकर सम्यग् ज्ञातस्त्वया मे चित्तदाहः। परीक्षासमये न किमपि मया लिखितं पत्रपुटे। तेन च यशस्तावद् दुष्प्राप्यमेव मे भाति। अत्र विद्याधिदेवस्य श्रीगणेशस्य साहाय्यं प्राप्तुमिच्छामि।

**प्रभाकरः**—किं करिष्यति विद्याधीशोऽत्र! त्वया न कदापि पाठाः पठिताः। गुरुवाक्यं नानुसृतं वा। परं कलहेन चालस्येन च दिवसा नीताः। परीक्षायशः कथं प्राप्यतेऽधुना!

**गोविन्दः**—जनास्तावत् कथयन्ति यदिदं दैवतं दयाघनं विद्यते। दीनाय च ददाति निजधनम्। 'यदि मे परीक्षायशः प्राप्यते तर्हि श्रीगणेशाय महापूजां महानैवेद्यं च समर्पयामि' इति प्रार्थयितुं गच्छामि देवालयम्।

**प्रभाकरः**—भवतु अनुसरामि तत्र त्वाम्। 'अनारोपितस्य वृक्षस्य मधुराणि फलानि प्राप्नुयाम्' इति प्रार्थयितुमिच्छामि।



**गोविन्दः**—आपणे कर्पूरं शर्करां च नैवेद्यार्थं क्रीणीवः। अनन्तरं देवालयं गच्छावः।

**प्रभाकरः**—तथा। सम्मतमिदं मम।

[ उभौ तथा कृत्वा मार्गेण देवालयं गच्छतः। पार्श्वयोः स्थिता बहवो याचकाः। तान् दृष्ट्वा गोविन्दो वदति। ]

**गोविन्दः**—अहो सम्मर्दो याचकापसदानाम्। अतीव खेदकरमेतेषां दर्शनम्। महती च पीडाऽस्मादृशानाम्। निर्वासयितव्या एतेऽस्मात् स्थानात्।

**प्रभाकरः**—आवामपि याचकावेव। किमर्थं तान् वराकानधिक्षिपसि?

[ कञ्चित् क्षुधितं कृशाङ्गं याचकं दृष्ट्वा दयाकुलितः प्रभाकरस्तस्मै शर्कराखण्डान् दातुं प्रवर्तते। ]

**गोविन्दः**—मा मैवम्। प्रथमत ईश्वराय समर्पणीया शर्करा न तु मानवाय।

**प्रभाकरः**—नैतत् सर्वथाऽनुकरणीयम्। ईश्वरः सर्वेषु प्राणिषु स्थितो भवत्यंशरूपेण। भूतदया चाद्यं धर्मतत्त्वम्। अतः खलु याचकायैवास्मै प्रयच्छामि शर्कराम्। [ तथा करोति ]

**गोविन्दः**—भवतु। पापभाग् भविष्यसि।

**प्रभाकरः**—न गणयामि तादृशमशास्त्रवचनम्।

**गोविन्दः**—( देवालयम् प्रविश्य ) अहो महान् खलु समवायो भक्तजनानाम्। कथं कार्यं देवदर्शनम्।

**प्रभाकरः**—अस्मात् स्थलादेव देवदर्शनं कार्यम्। स्फुटमेव पश्यामि श्रीगणेशमूर्तिम्।

**गोविन्दः**—नैतद् दर्शनं नाम। देवस्य समीपमेव गन्तव्यं चरणयोश्च पतितव्यम्।




[तथा करोति। द्वारतस्थितान् भक्तजनान् पार्श्वयोः सम्पीड्य च सन्ताड्य चान्तः प्रविशति। तथैव च पुनर्बहिरायाति महता प्रयासेन। एतस्मिन्नन्तरे प्रभाकरो बहिरेव स्थितः सन्नेकाग्रचेतसा श्रीगणेशस्तोत्राणि पठति।]

**प्रभाकरः**—अपि साधितं देवदर्शनम्!

**गोविन्दः**—अथ किम्। प्रसादोऽपि प्राप्तः।

**प्रभाकरः**—अहं पुनर्मन्ये चित्तसमाधानमेव देवदर्शनम्। ईशप्रसादश्च चित्तप्रसन्नता।

**गोविन्दः**—भवत्वेवम् । गृहं प्रति निवर्तावहे ।

[ मार्गे पतितं प्रकाशमानं सुवर्णपुष्पं गोविन्दः पश्यति । मन्यते च अयं प्रसादो मे श्रीगणेशेन दत्तः । निभृतमेव स तद् गृह्णाति । ]

**प्रभाकरः**—किं तद् गोविन्द ।

**गोविन्दः**—न किमपि वीक्षणार्हम् । मया तद् दृष्टं प्रक्षिप्तं च सुदूरम् ।

**प्रभाकरः**—किमपि प्रकाशमानं पीतवर्णं तदासीत् । त्वया च तदुद्धृतमिति मे तर्कः ।

**गोविन्दः**—विपरीतमेव ते नेत्रकार्यम् । भवतु । आपृच्छे त्वां गृहगमनायानेन मार्गेण ।

**प्रभाकरः**—शुभास्ते पन्थानः सन्तु ।




[ एतस्मिन्नन्तरे काचन स्त्री ' बध्यतां स कुमारः । तेन हि मे सुवर्ण-पुष्पं गृहीतम् ' इत्युच्चैराक्रोशन्ती महता जवेन प्रधाविता । तदाकर्ण्य बहवो

जनास्तत्र मिलिताः प्रभाकरगोविन्दौ च तैः संरुद्धौ । गोविन्दस्य वस्त्रात् तत् सुवर्णपुष्पं च सम्प्राप्तम् । स च सर्वैर्निर्भर्त्सितः ।]

**गोविन्दः**—किं क्रियतामधुना वयस्य ? हेपितोऽस्मि जनैः धिक्कृतोऽस्मि बालकैरपि । एतादृशीमपकीर्तिं कः सहेत । गमिष्यामि य कुत्रापि करिष्यामि वाऽऽत्महत्याम् ।

**प्रभाकरः**—नैतद् युक्तं गोविन्द । नेष्यामि त्वां सत्पुरुषं प्रति । स च त्वां शिक्षयिष्यते धर्मतत्त्वानि । यदनुरोधेन यशः सुखं च लभते मानवः ।

---

**प्रश्नाः**—किमर्थं गोविन्दोऽगच्छद् देवालयम् ? किमर्थं च प्रभाकरः ? याचकान् दृष्ट्वा किमवदत् स कुमारः ? केन भावेन द्वितीयः कुमारो याचकाय शर्करां प्रायच्छत् ? कथं देवदर्शनं साधितं गोविन्देन ? कथं च प्रभाकरेण ? किमिति सुवर्णपुष्पं गोविन्देन गृहीतम् ? कस्तस्य परिणामः ?

**वाग्विलासः**—

१ ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
२ क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ।
३ उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः ।
दैवेन देयमिति का पुरुषा वदन्ति ॥
दैवं निहत्य कुरु पौरुषमात्मशक्त्या ।
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ १ ॥

---

# परापकारो निजापकारः ।

राधानगर्यां कस्मिन्नपि क्षत्रियकुले विनोदो नाम दशवर्षदेशीयः कुमार आसीत् । तस्य च कनीयसी भगिनी विमला । विनोदः सदा विनोदपूर्णो विमलामुपहास्यतां नेतुं सविशेषं प्रायतत । अथैकस्मिन् दिने पाठशालानिवृत्ताभ्यां ताभ्यां मात्रा जम्बुफलानि भक्षणार्थं दत्तानि । 'कति फलानि वत्से त्वया लब्धानि' इत्यपृच्छद् विनोदः । विमलाऽवदत् 'नाहं कथयामि प्रथमम् । त्वया कति प्राप्तानि तदादौ कथय' इति । हस्तं प्रसार्य विनोद आत्मनो जम्बुफलान्यदर्शयत् 'पश्यैतानि सप्त जाम्बवानि' इत्यवदच्च । 'मयाऽपि तावन्ति' इत्यकथयद् विमला हस्तं पृष्ठतः प्रच्छाद्य । 'अलं शङ्कया नापहरिष्यामि तव फलानि । उद्याने शीतलासनमुपविश्य जाम्बवानां साहाय्येन सङ्ख्यागणनं शिक्षयामि वत्साम्'। इत्युक्त्वा विश्वासमुत्पाद्य स तां तत्रानयत् । 'गणय तव फलानि क्रमशः—एकं, द्वे, त्रीणि, चत्वारि; एकं, द्वे, त्रीणि' इति सहेतुकमगणयद् विनोदः । तथैवानुकृतं तया कन्यकया । तदा सव्याजं स कुमारोऽपृच्छत् 'चत्वारि त्रिः—चत्वारि त्रिः कति भवन्ति ? त्वया पठितमेव पाठशालायाम्' । तत्क्षणमेव निष्कपटं विमलयोक्तम्—'द्वादश, द्वादश'—इति । तदा सकरुणं विनोदोऽवदत् 'त्वया द्वादश फलानि लब्धानि मया तु सप्तैव । त्वयि माता स्निह्यति न मयि । मह्यं तावद् देहि द्वे त्रीणि वा जाम्बवानि कृपया' इति । अनेन वचसा विमलाया विमलहृदयमार्द्रीभूतम् । तया च सबाष्पं दत्तानि त्रीणि जाम्बवानि भ्रात्रे ।

अथ कदाचित् गृहान्तर्भागे रात्रौ विनोदः सुखेनोपविष्ट आसीत् । दीपाभावात् तत्र अन्धकारं दृष्ट्वा स विमलां भाययितुं कमपि उपायं चिन्तितवान् । अचिरेण माता 'पूजोपकरणानि गृहीत्वा प्राङ्गणमागच्छ'




इति तामवदत्। एतदाकर्ण्य विनोदः प्रमुदितोऽभवत्। यतः किल प्राङ्गणं गच्छन्त्या विमलया गृहान्तर्भागोऽवश्यमाक्रमितव्यः। ततो द्वारदेशे पादौ प्रसार्य स तथाऽऽसीनोऽभवत् यथा तस्या मार्गो निरुद्धः। एवं स्थिते सति विमलाऽऽगमनं प्रतीक्षमाणः स चिरं तत्र स्थितः परं विमला केनापि कारणेन चिरायिता। एतस्मिन्नवसरे मूषकानन्विष्यन् बिडालस्तत्रागच्छत्। अन्धकारे प्रसारितौ विनोदपादौ मूषकाविति मत्वा स नखैः किञ्चित् व्यदारयत्। तेन भृशं पीडितो विनोद उच्चैराक्रोशन् बहिः पलायितः। मात्रा सकरुणं पृष्टश्च व्यथाकारणं कथयितुं लज्जयाऽक्षमोऽभवत्। अनेन विफलप्रयत्नेन सन्तप्तः स भगिनीमर्दितुं सदा चिन्तपर आस्ते।

अपरस्मिन् दिने पाठशालानिवृत्तो विनोदो मातरं किमपि कथयन्तीं विमलां दूरतो दृष्ट्वा बहिरेव मुहूर्तमतिष्ठत्। " अधुनैव काश्चिद् बाला

आगमिष्यन्ति। वयं क्रीडनानि गृहीत्वा रमामहे स्वैरम्" इति। ततश्च खाद्यानि ग्रहीतुं सा मातरमन्वगच्छद् महानसम्। तदा सत्वरं तस्याः क्रीडनकानि विनोदो निभृतं समचिनोद् आत्मनः पेटिकायां च स्थापितवान्। पेटिकां च स्वपुस्तकैः प्रच्छाद्य क्रीडाङ्गणमधावत्। खाद्यानि गृहीत्वा सखीभिः सह विमला उद्यानमागच्छत्। पुनरपि च क्रीडनकान्यानेतुं गृहं प्रयाता। इतस्ततोऽन्विष्यन्ती चिरेणापि न किञ्चित् प्राप्तवती। तेन निराशया खिन्नं तस्या वदनं जातम्। ततः सा मातरमपृच्छत्।

'अयि अम्ब कुत्र गतानि मे क्रीडनकानि नैकमप्यासादयितुं शक्ताऽहम्। कथमधुना क्रीडामः। सख्यो मां प्रतीक्षन्ते। आह्वयन्ति च। किं करोम्यधुना।' इत्युक्त्वा उच्चै रोदितुमारभत। तदा माताऽपि खेलनसाधनानि प्राप्तुमयतत। किन्तु विफलास्तस्या अपि प्रयत्नाः। एतद् दृष्ट्वा पुनरपि विमलाऽरोदीत्। तस्याः सख्योऽपि तत्रागच्छन्। निराशाभिभूताश्च ताः कन्या इतस्ततः किमपि किमपि कुर्वत्यः सखेदं कालमनयन्। एनं वृत्तान्तं सानन्दं प्राङ्गणस्थो विनोदोऽपश्यत्। विमलारोदनं च श्रुत्वाऽहसद् उच्चैः। अनेन सफलप्रयत्नेन प्रीतमनाः स बालस्तस्मिन् दिने विलम्बेन भोजनमकरोत्। निद्रितश्चाभवत्। अन्येद्युः प्रभाते पाठशालां गन्तुं मात्रा प्रबोधितो विनोदो क्षिप्रमेव पेटिकां गृहीत्वा पाठशालां प्रति धावन्नगच्छत्। "किमर्थं रे विलम्बादागतोऽसि" इति गुरुणा पृष्टः स न किञ्चिदपि प्रत्युत्तरं दत्वा स्वस्थाने स्थितोऽभवत्। 'किं किं लिखितं त्वया। गणनमपि कृतं न वा। दर्शय तव लेखम्।' इति गुरुणा पुनरपि तर्जितो विनोदो यावत् पेटिकां वीक्षते तावत् महान्तं विषादं प्राप्तः। न च किंचिदपि स दर्शितवान्। ततश्च 'कथं रे मूढ न किंचिदपि पठितम्' इति वदन् गुरुर्विनोदस्य समीपमागच्छत्। 'दर्शय तव लेखम्। मुखमार्जनपि न कृतं किम्'। इत्युक्त्वा स तस्य पेटिकां स्वयमेव गृहीत्वा तस्या अन्त-




र्भागात् कन्याक्रीडनकानि समुद्धृतवान्—चुल्ली, पेषणचक्रं, पाकभाण्डानि, राजाराज्ञी-प्रतीकानि, तयोश्च वस्त्रालङ्कारादीनि। एतानि वस्तूनि सर्वेभ्यः कुमारेभ्यो गुरुः प्रादर्शयत्। तदा महान्तं विनोदमन्वभवन् सर्वे छात्राः। विनोदस्तु भृशं लज्जाऽभिभूतोऽवनतवदनोऽतिष्ठत्। "कीदृश्यस्ते क्रीडाः। कन्याभिः सह क्रीडसि किम्।" इत्यादीन् गुरुप्रश्नान् श्रुत्वा सर्वे च ते कुमारा उच्चैः प्राहसन्। एवं भगिनीं तुदन्नसौ विनोदः स्वयमेव वयस्य-समक्षमुपहास्यतां गतः।

---

**प्रश्नाः**—कथं किमर्थं च गणनमशिक्षयद् विनोदो भगिनीम्? किममन्यत विमला तदा? कस्मात् कारणाद् अन्धकारे पादौ प्रसार्य विनोदः स्थितः? कश्च तस्य परिणामः? किं क्रीडासाहित्यं विमलायाः? कस्माद् न लब्धं तत् तया? किमर्थं पेटिकां दृष्ट्वा पाठशालायां विनोदो विषादं गतः?

**कथनान्तरम्ः**—उपरिगतकथायाश्चरमं प्रसङ्गं विनोदमुखेन निवेदयत। पुनश्च विमलामुखेन।

**वाग्विलासः**—सुमन्त्रिते सुविक्रान्ते सुकृतौ सुविचारिते।
प्रारम्भे कृतबुद्धीनां सिद्धिरव्यभिचारिणी॥

---

# सापत्न-प्रेम।

आसीत् कृष्णातीरे माहूरी नाम नगरम्। तत्रावसत् कोऽपि धर्मशीलो गोविन्दशर्मा ब्राह्मणः। तस्य प्रथमपत्न्याः शान्ता नाम गुणवती कन्या जाता। त्रिचतुरैः संवत्सरैश्च सा पत्नी दैववशाद् रोगग्रस्ता दिवंगता। अचिरेण गोविन्दो द्वितीयां भार्यां पर्यणयत्। तया सार्धं च संसारशकटं पुनरपि चालयति स्म। शान्तायाः सापत्नमाता दुर्गा तु स्वार्थपरा मत्सरग्रस्ता चासीत्। कतिभिर्दिनैर्दुर्गायाः पुत्रो जातः। तदा महानुत्सवः संवृत्तो ब्राह्मणकुलं च तदानन्दस्य परां कोटिं प्राप्नोत्। सुकुमारेण तेन बालकेन सह सदा क्रीडन्ती शान्ता पुनः सविशेषं प्रमुदिताऽभवत्। मुहुर्मुहुस्तं प्रीणयितुं मधुरं गानमकरोत्। तस्मै च स्वयमेव स्वादूनि खाद्यानि प्रायच्छत्। अथैकदा नगरमातुः कृष्णादेव्याः सांवत्सरिकं पूजोत्सवं द्रष्टुं प्रस्थिता सौभाग्यवती दुर्गा। कुमारं मधुकरं कन्यां शान्तां चात्मना सह नेतुमैच्छत्।

मधुकरस्य हस्तयोः सुवर्णवलये पादयोश्च किङ्किणिके समारोप्य 'अहो मे हृदयानन्दो वत्सः' इति तं सस्नेहं निरीक्षमाणा तस्य कण्ठं भूषणहीनमपश्यत्। 'अयि शान्ते तव मणिमालां वत्साय प्रयच्छ' इति दुर्गावचनं श्रुत्वा सत्वरमेव निजहस्ताभ्यामात्मनो मणिमालां मधुकरस्य कण्ठे

समर्पितवती सा सुशीला कुमारी । तेनात्यन्तं प्रहृष्टा दुर्गा मधुकरेण शान्तया च सार्धं कृष्णादेव्या मन्दिरमगच्छत् । महान् जनसम्मर्द आसीत् तस्मिन् स्थले । तत्र केनापि चौरेणापहृता मणिमाला मधुकरकण्ठात् । न चैतद् ज्ञातं केनचित् तस्मिन् कोलाहले । देवीपूजनं कृत्वा प्रसादं च प्राप्य सायंकाले गृहं निवर्तिता दुर्गा बालकाभ्यामनुगता । सहसैव




शान्ता तारस्वरेणावदत् ' अहह, कुत्र गता वत्सस्य मणिमाला' इति । तेन च सर्वेऽपि ते विषादं प्राप्ताः । दुर्गा तु कोपात् शान्तामुद्दिश्य

वाग्विषमिदमुदगिरत् 'त्वयैव प्रायो दग्धमुख्या सा मणिमाला निभृतमपहृता प्रक्षिप्ता च नद्याम्' इति। सापत्नमातुरिदं निष्ठुरवचः समाकर्ण्य भृशं दुःखिता शान्ता चिरमरोदीत्। अन्नमपि नास्पृशत्। ततः पित्रा मधुकरेण च सा बाला महता प्रयासेन सान्त्विता।

दिनेषु गच्छत्सु पञ्चवर्षदेशीयो मधुकरः शान्तया सह पाठशालामगच्छत्। सायंकाले गृहं प्रतिनिवृत्य, अल्पाहारं च कृत्वा, उद्यानेऽक्रीडत्। मधुकरस्य विद्यार्जने शान्ता प्रतिदिनं साहाय्यमकरोत्। एवं तयोर्दिनक्रमोऽवर्तत। अथ कदाचित् सायंकाले पाठशालाया आगताभ्यां शान्तामधुकराभ्यां किंचित् किंचित् खाद्यं दत्वा दुर्गाऽवदत् 'शान्ते, त्वमत्रैवोपविश्य गृहसंमार्जने पाकनिष्पत्तौ च मम साहाय्यं कुरु। वत्स मधुकर



त्वमेकाकी कंचित् कालं विहर क्रीडाङ्गणे' इति। 'भवतु। यथाऽऽदिशति माता' इत्युक्त्वा गृहकार्ये निमग्नाऽभवत् सा कन्या। 'मा तावत्। न मे रोचते क्रीडा तथा यथाऽऽर्यया सह'–इति मधुकरो यावदवदत् तावत् तं दुर्गा हस्तेनाकृष्यान्तर्गृहमनयत्। तस्मै च बहुलौ मोदकौ दत्वा तं प्राहिणोदुद्यानं क्रीडार्थम्। तेन नितान्तं मुदितः स तत्राम्रवृक्षस्याधस्तादुपविश्य हस्तगतौ मोदकौ भक्षयितुमारभत। ततः कश्चित् कपिर्वृक्षादवतीर्य मधुकरस्य हस्तयोर्मोदकौ बलादपाहरत्। तेन भीतभीतः स बालक उच्चैराक्रोशत्। तत्क्षणादेव तत्रागता दुर्गा शान्ता प्रातिवेशिकाश्च। 'कपिनाऽपहृतौ मे मोदकौ नखैश्चाहं पीडितः।' इति रुदनपूर्णं मधुकरवचो वृक्षाच्च महान् कपिचीत्कारस्तैः श्रुतः।

---

**प्रश्नाः**—कीदृशो दुर्गायाः स्वभावः? कीदृशी पुनः शान्ता? केन कारणेन नष्टं कनकसूत्रं मधुकरकण्ठात्? अलङ्कारधारणस्य कः परिणामः प्रायो दृश्यते? किमर्थं मधुकर एकाकी दुर्गया उद्यानं प्रहितः?

**वाग्विलासः**—सत्यानुसारिणी लक्ष्मीः कीर्तिस्त्यागानुसारिणी।
अभ्याससारिणी विद्या बुद्धिः कर्मानुसारिणी॥ १॥
ईर्ष्यी घृणी त्वसन्तुष्टः क्रोधनो नित्यशङ्कितः।
परभाग्योपजीवी च षडेते दुःखभाजिनः॥ २॥

---

# भ्रान्तचित्तस्य देवदत्तस्य।

कल्याणपुरे किमपि क्षत्रियकुलमासीत्। तत्र देवदत्तो नाम दशवर्षदेशीयः कुमारः। स एकस्मिन् दिने भोजनं समाप्य पाठशालां प्रति गन्तुं सज्जोऽभवत्। तस्मिन्नेव समये पितुर्लेखनसाहित्यं नयनमनोहरं तस्य दृष्टि-

पथमायातम् । तदा तेनोक्तम्—' अहो सुरुचिरेयं लेखनी, मसीपात्रं चेदं कौतुकास्पदम् । इमानि पत्राणि पुनर्ज्योत्स्नाधवलानि सुललितानि च । नैतादृशं साहित्यं कदापि मह्यं ददाति तातः । अधुनैव गृहीत्वेदं किमपि लिखामि ' इति । यावत् स पञ्चषडक्षराणीतस्ततो लिखति तावद् विद्यालयाद् घण्टानिनादस्तस्य श्रुतिपथमागतः । तत्क्षणं स चलितुमुत्पतितः । तेन सम्भ्रमोद्गमेन रक्तमसीपात्रमुत्क्षिप्तम् । ' हन्त, महान् खलु प्रमादोऽयम्' । इत्युदीर्य देवदत्तो हस्तवस्त्रेण प्रवहन्तमलक्तं प्रामार्जयत् । महता जवेन च पाठशालां प्राधावत् । ' किमर्थं रे विलम्बेन समागतोऽसि ' इत्याचार्येण पृष्टोऽसौ तूष्णीमतिष्ठत् । ' घर्मावृतं वदनं परिमार्जय पद्यं च पठ ' इत्याज्ञप्तोऽसौ तेनैव रक्तमसीक्लिन्नेन हस्तवस्त्रेण मुखमास्पृशदुच्चैरपठच्च— ' उदये सविता रक्तो रक्तश्चास्तमने तथा ।' इत्यर्धोक्ते तस्मिन् श्लोके सर्वे च ते कुमारा उच्चैरहसन् । आचार्योऽप्यब्रवीत् ' युज्यते खलु । रविवद् देवदत्तोऽपि रक्तमुखः ' । इति ।

अथ कदाचिद् देवदत्तस्य मातुलो निजाश्वमारुह्य कल्याणपुरमागतः । बहिरेव वृक्षमूले तं वाजिनं बद्धा स गृहान्तर्भागे स्वस्रा सह कुशलकथाः कुर्वन् स्थितः । एतस्मिन्नन्तरे संध्यासमयोऽभवत् । देवदत्तश्च विद्यालयात् प्रतिनिवृत्तः । प्राङ्गणभागे तमश्वं दत्तपर्याणं दृष्ट्वा महत् कुतूहलमुत्पन्नं तस्य चेतसि । ' अहो, बत हयः । कथमत्रागतोऽयम् । चित्रितः किल वर्णोऽस्य चेतोहारि चाङ्गष्ठवम् । बलवती खलु म उत्कण्ठाऽस्य पृष्ठमारोढुम् ' इति । तस्मिन्नेव क्षणे देवदत्तस्य शब्दमाकर्ण्य बहिरागतस्तस्य मातुलो माता च । तं दृष्ट्वा स कुमारोऽवदत्—' अपि भवताऽऽनीतोऽयं हयवरः । महती खलु मे मनीषा तदारोहणे । अधुनैव भवतः साहाय्येनारोहाम्येनम्—' इति । तदा मातुलो माता च तमाहतुः । ' मुहूर्तं तावद् धारयस्व । श्वः प्रभाते तमारोह— । ' एतदर्धोक्तं श्रुत्वा ससंभ्रमं सरोषं च

देवदत्तेनोक्तम्—‘ अस्मिन्नेव क्षणे हय आरोह्यो मया। एष आरोहामि तं नापेक्ष्यते च भवतः साहाय्यम्’ इति। बालस्य निर्बन्धं ज्ञात्वा मातुलोऽश्वरश्मीन् धारयितुं पुरतोऽभवत्। सत्वरं च प्लवनमय्यैव गत्या देवदत्तः समीपमायातः। संभ्रमवशात् वामपादधारण्यां दक्षिणपादं निधाय सावेशं




समुत्पत्य च स हयपृष्ठे लाङ्गूलाभिमुखमुपाविशत्। ‘ मा मैवम् ’ इति आक्रोशति मातुले ‘ अपरिचितः कोऽपि नरो मे पृष्ठे ’ इति मन्यमानः स तुरगो महता वेगेनोत्प्लुत्य सुदूरं प्रधावितः। पर्याणं हस्ताभ्यां दृढं धारयन् भीतभीतः स कुमारः कथंचित् कन्दुकवत् कम्पनपरोऽश्वपृष्ठे स्थितः। तस्य शिरस्कं पवनेनोद्धूतं पुस्तकानीतस्ततो विकीर्णानि लेखन-साहित्यं च समुत्क्षिप्तं दशदिशासु। ‘ चतुरः खलु कोऽप्ययमश्वारोहः’ इति शब्दैः प्राहसन् देवदत्तं पथिकाः। इत्थं रंहसा धावन् स तुरङ्गः क्रीडाङ्गणं प्राप्तः। तस्य पृष्ठे लाङ्गूलाभिमुखमुपविष्टं भया-

क्रान्तं देवदत्तं वीक्ष्य तत्रस्थाः खेलन्तः सर्वे कुमारा उच्चैर्व्यहसन् विनोदं चान्वभवन् । ' अपूर्वं किमपि तव कौशलं हयारोहणे ' इत्यवदंश्च ।

कतिपयैर्दिवसैर्देवदत्तस्य पित्रा क्रीत एकोऽश्वः । चित्रिताङ्गः स चित्ताकर्षकाकृतिरासीत् । स्वयं गुणनिबद्धः स स्वगुणानुभावेन सर्वेषां मनांसि प्रीणयति स्म । द्रुतगतिः स सुदूरं प्रधावन्नपि स्वामिजनचेतसि न्यदधाददूरवर्ति पदम् । अचिरेण स हयो देवदत्तस्य सुपरिचितो जातः । यथाकालं खाद्यपेयप्रदानैश्च मुहुर्मुहुः सस्नेहपरामर्शनैश्च भूयोभूयः प्रोच्चारितैर्नियोगैश्च स कुमारस्तं प्राणिनं स्ववशमकरोत् । गच्छता कालेन हयारोहणे निपुणोऽभवद् देवदत्तः । यद्यत् स कुमार आज्ञापयति तत्तदनुतिष्ठति स वाजी सत्वरं सोत्साहं सवैदग्ध्यं च । अथ कदाचिद् अनध्यायदिने निजाश्वमारुह्य देवदत्तो वयस्यैः सह विहारार्थं गतः । तत्र सुचिरं विविधाभिः क्रीडाभिर्विनोदं कृत्वा गृहं प्रति निवृत्ताः सर्वे सायंकाले । मार्गे सुफलितं जम्बुद्रुमं दृष्ट्वा कुमारा अवदन्—' भो देवदत्त हयारुढोऽसि । हस्तगतानि जाम्बवानि समादाय निक्षिप्यन्तामस्मभ्यम्'—इति । ' यथेप्सितं युष्माकम्' इत्युक्त्वा क्षणार्धादेव हस्तावुद्यम्य बहूनि जाम्बवानि देवदत्तेन विलूनानि वयस्यहस्तेषु च निक्षिप्तानि । सुपक्वानि कानिचिद् उन्नतानि वीक्ष्य हयपृष्ठे स उदतिष्ठत् । भुजावुद्यम्य तानि यावत्सोऽधिगच्छति तावत्ते कुमाराः साश्चर्यं सप्रशंसं चाब्रुवन् । 'अहो, आज्ञाधीनत्वं हयस्य—अहो, आरोहणनैपुण्यं देवदत्तस्य' इति । एतदाकर्ण्य प्रमुदितो देवदत्त उच्चैरपठत् ।—

गुणी गुणं वेत्ति न वेत्ति निर्गुणो
जानन्ति मेऽश्वस्य गुणान् भवन्तः ।
' तिष्ठे'ति शब्दं श्रुतवान् स्थितोऽयम्
' चले'ति शब्दं श्रुतवान् प्रधावेत् ॥ १ ॥




श्लोकगतं 'चल' इति तारस्वरेणोदीर्णं शब्दं नियोगं ज्ञात्वा महता वेगेन प्राधावत् स हयः। तत्क्षणं च सशब्दं भूमौ न्यपतद् भ्रान्तचित्तो देवदत्तः।

---

**प्रश्नाः**—पाठशालां गच्छन् देवदत्तः किमर्थं चिरायितः? केन कारणेन मसीपात्रमुत्क्षिप्तम्? कदा देवदत्तं प्राहसन् कुमाराः? प्राङ्गणे हयं दृष्ट्वा किमकरोद् देवदत्तः? कस्मात् कारणाद् लाङ्गूलाभिमुखं स उपविष्टोऽश्वपृष्ठे? कथं स्ववशमकरोत् स द्वितीयं हयम्? कुत्रानयत् तम्? किमर्थं वाजिपृष्ठे स्थितः स बालः?

वाग्विलासः—सहसा विदधीत न क्रियाम्
अविवेकः परमापदां पदम् ।
वृणुते हि विमृश्यकारिणं
गुणलुब्धाः स्वयमेव सम्पदः ॥ १ ॥

---

## बालसुलभा क्रीडासक्तिः ।

अनध्यायदिने सुहृद्गणं समाहूय क्रीडामग्नोऽभवद् अशोकः । प्रथमतो नृपाभिनयं कृत्वा तेन सभामण्डलं रचितं, भाषणानि कृतानि, पारितोषिकानि [ बदरीफलानि ] च दत्तानि । अनन्तरं नलिनी नाम काचित् बालाऽध्यापिकाया भूमिकां गृहीत्वा शिष्यान् सङ्गीतमशिक्षयत् । आलेख्यकार्ये च तेषां कौशलं गुणप्रदानेन परीक्षितवती । 'नैतद् विनोदकरम् । अलमेतेन स्थविरशीलेन मूकभावेन च व्यवसायेन । अहं नाटयामि चौर्यं युष्माकं केचिद् भवन्तु गृहिणोऽपरे च रक्षिणः ।' इत्यवदत् कोऽपि चपलो बटुः । तदनुसारेण गोपनान्वेषणैश्च धावनोत्पनैश्च चौरग्रहणं क्रीडाप्रसङ्गेन तैः कुमारैरभिनाटितम् । ततश्च 'क्रीडारङ्गं रचयामि । मत्पालितानां श्वापदानां च चेष्टा दर्शयामि' इत्यनपेक्षितवचनेन वयस्यांश्चकितानकरोद् अशोकः । क्रीडनकपेटिकां गृहीत्वा रङ्गमध्ये स उपाविशत् । प्रथमतः, भेकोत्पूनं, मेषोत्पतनं, वानरोत्पतनं, हयोत्पतनं, वृकोत्पतनम्— इत्यादिभिर्विविधैः प्रकारैः स आत्मन उत्पतनचातुर्यं प्रादर्शयत् । प्रेक्षकाश्च करतलताडनैस्तमभ्यनन्दन् । 'अधुना पश्यन्तु भवन्तो मे बलप्रभावम्' इत्युक्त्वा पेटिकायाश्चतुश्चक्रं रथमादाय, अङ्कुटघूर्णनेन च तस्य गतियन्त्रं सज्जीकृत्य स भूमौ तमचालयत् । 'महता जवेन चलन्तमेनं

रथं स्थिरीकरोमि' इति शब्दैः स तद् क्रीडनकं करेण पृष्ठतोऽगृह्णात्। बलकार्यं चाविष्कृतवान्। 'अन्यच्च'—इत्यर्धोक्ते चर्मपटनिर्मितं गजमु-




द्धृत्य तं च निजोरसि स्थापयित्वा, उच्चैराक्रोशदशोकः। 'पशुपुङ्गवं मातङ्गमपि स्वशरीरे लीलयैव धारयामि। प्रस्तुवन्तु श्रीमन्तो मे शक्तिप्रभावं परितोषयन्तु च मां द्रव्यदानेन'। इति। एतद् वीक्ष्य सर्वे बाला जयशब्दैस्तं प्राशंसन्। 'अतोऽपि महीयसी मे शक्तिः। तदोजसा न केवलं ग्राम्यपशवः परं वन्यपशवोऽपि वश्या भवन्ति'। इत्यवदत् स बालः। पेटिकायाश्च व्याघ्रौ सिंहं कुक्कुरौ मेषं च बहिराकर्षत्। व्याघ्रौ शकटधुरि नियुज्य तदुपरि मेषं चोपवेश्य तं रङ्गं परितः प्राचोदयत्। ततोऽन्यस्मिन् प्रवहणे कुक्कुरौ निबध्य तस्मिन् सिंहं च संस्थाप्य तमपि स क्रीडाङ्गणे प्रावर्तयत्। अनन्तरं कस्यामपि स्थाल्यां खाद्यं निधाय सर्वानपि पशून् तद्भक्षणकर्मणि स प्रेरितवान्। इत्थं स रङ्गनायकः क्रीडाकौशलेन सकलान् बालान् प्रामोदयत्।

'अधुना नगराद् बहिर्गच्छामो वायुसेवनार्थम् । अलमेताभिर्गृहस्थितक्रीडाभिः ।' इत्युपन्यस्तं केनापि बटुना । 'भवत्वेतद् । उपस्थितः सूर्यास्तसमयः सूचयति यदनावृतप्रदेशे विहरणमेव सम्प्रति श्रेयस्करम् । तत्रैव व्रजामः स्वैरं चेतस्ततो विहरामः ।' इत्यनुमुदितं सर्वैः । सत्वरं शिरस्त्राणि पादत्राणि च परिधाय प्रस्थितास्ते बाला विहारार्थम् । किंचिदन्तरं यदा ते गतास्तदा काचित् बालिकाऽवदत् । 'विजनोऽयं भूभागः । यदि कोऽपि चौरो वा पशुर्वाऽस्मानभिपतेत् तर्हि दुःखं भवेत्' इति । ततः कोऽपि बटुर्विहस्याब्रवीत् । 'रङ्गनायको वर्ततेऽयमशोकशर्माऽस्माकं मध्ये । स पशून् वशीकर्तुं चौरान् वा दमयितुं समर्थः । न किमपि शङ्कास्थानमत्र । स सर्वेषां रक्षको भवेत् ' इति । एतदाकर्ण्य महान्तं विनोदमन्वभ-



वन् ते सर्वे बालाः प्रचलिताश्च सोल्लासं नगराद् बहिः। मार्गस्य पार्श्वभाग आसन् बहूनि क्षेत्राणि। तत्रारोहन् विविधानि सस्यानि। तेषु भूपुटकं दृष्ट्वा हर्षिता अभवन् ते कुमाराः। 'अस्मात् क्षेत्राद् गृह्णीमः कानिचिद् भूपुटकानि। न च दृश्यते क्षेत्रपालः समीपे'। इत्यवदन् केचित्। 'मा तावत्। नैतद्युक्तं परार्थहरणम्। गच्छाम मार्गेण यथापूर्वम्' इति चापरे। अत्रान्तरे द्वौ चपलौ कुमारौ भूपुटकानि ग्रहीतुं क्षेत्रं प्रति गतावेव। तत्क्षणे तत्रस्थः कुक्कुरो महता वेगेनाभ्यद्रवत्। तं दृष्ट्वा कुमारौ द्रुतं पलायितौ परं तेनाचिरेण समासादितौ। कुक्कुरस्य भषणेन ते बाला भीतभीता इतस्ततः प्राधावन्। अशोकः प्रथमतः किंचिद् धैर्यमवलम्ब्य हस्तमुद्यम्य च तदभिमुखमतिष्ठत्। कुक्कुरेण तस्य वस्त्रं धृतं विदारितं च। ततो विगलितधैर्यः स बालो गृहाभिमुखं पलायितः। तान् बालानन्वधावत् स सारमेयः। एकां कन्यां समासाद्य तस्या वस्त्राञ्चलं व्यदारयत् पादं च नखैरक्षणोत्। एतावता कालेन कैश्चित् मार्गस्थैः पुरुषैर्निस्सारितः स शुनकः। ततश्च परिश्रान्ता विभ्रान्ताश्च ते बालाः परस्परं दूषयन्तः सखेदं शनैः शनैर्गृहं प्रयाताः।

---

**प्रश्नाः**—कथं खेलन्ति बाला अनध्यायदिने? किमर्थं क्रीडायै तेषां महती स्पृहा? के गुणा आविर्भवन्ति तेषां क्रीडायाम्? के च दोषाः? इतिहासप्रसिद्धानां केषांचिद् बालानां क्रीडा वर्णयत।

**वाग्विलासः**—सुभाषितेन गीतेन बालकानां च लीलया।
मनो न द्रवते यस्य स योगी ह्यथवा पशुः ॥ १ ॥

---

# शठं प्रति शाठ्यम् ।

अस्ति कुरङ्गग्रामे कलिपुत्रो नाम कश्चिद् विपणिकः । महापथे तस्य पण्यशालाऽवर्तत । दाडिमानि, नारङ्गाणि, जम्बीराणि, द्राक्षाफलानि, न्यग्रोधानि, आम्राणि, जाम्बवानि चेति विविधानि फलानि तत्र यथाकालं संभृतान्यासन् । कलिपुत्रो ग्राहकान् दृष्ट्वा प्रथमं मधुरवचोभिः समाकर्षद् अनन्तरं च नानाविधैर्व्यपदेशैस्तान् प्रातारयत् । यदि केनापि ग्राहकेण किंचित् फलं हस्तेन स्पृष्टं तर्हि सोऽवदत् । 'त्वया स्पृष्टमिदं फलम् । अधुना त्वयैव तद् क्रेतव्यं मूल्यं च दातव्यम् । त्वदुच्छिष्टं फलं कोऽन्यो ग्रहीष्यति' । इति । अन्यस्मै क्रयिणे सोऽपेक्षितफलस्य शकलमास्वादयितुं प्रायच्छत् । ततश्च 'त्वया फलास्वादोऽपि गृहीतः । देहि मे तन्मूल्यम् । नो चेत् रक्षापुरुषाय त्वां निवेदयामि' इत्यादिभिस्तर्जनैः स विपणिको द्रव्यमलभत । समीपस्था रक्षापुरुषा वशीकृता आसन्नुत्कोचदानैः। अत एव तस्य हितकामास्ते सर्वे । अन्यच्च स बहुवारं ग्राहकेभ्य एकप्रकाराणि फलानि दर्शयति ददाति चान्यप्रकाराणि । कूटतुलामानेनापि तान् वञ्चयति । अज्ञक्रेतृभ्यश्चापहरति नाणकानि नानाविधैर्विप्रलम्भैः ।

अथ कदाचिद् द्वौ कुमारौ तेन राजमार्गेण व्रजन्तौ कलिपुत्रस्य विपणिं प्राप्तौ । तत्रस्थानि सुपक्वानि मनोहराणि नानावर्णानि फलानि दृष्ट्वा तयोर्मनः साभिलाषमभवत् । समीपमेव मुहूर्तं स्थित्वा तौ परस्परमाहतुः । 'सुललितानि दृश्यन्ते द्राक्षाफलानि । परं न विद्यते द्रव्यं तदर्थम् । यद् किमपि वर्तते मे कञ्चुककोषे तद् ग्रन्थक्रयार्थम् । अमुना फलादानं फलभक्षणं च न श्रेयः । एतादृशे मोहपाशे नावाभ्यां पतितव्यम् । साधयावो ग्रन्थविक्रयालयं प्रति।' इति। यावत् तौ बालौ त्रिचतुराणि पदान्यग्रतो यातस्तावत् कलिपुत्रो भणति। 'किमर्थं भो गम्यते दूरतः । आस्वाद-




न्तामिमानि मधुराणि न्यग्रोधानि जाम्बवानि वा ।' इति । 'नावयोः फलैः प्रयोजनम्' इति हस्तचलनैस्तं सूचयित्वा तौ कुमारौ पुरतश्चलितौ । तत उच्चैराक्रोश्य स विपणी ब्रूते—'नैतदुचितम् । एतावत्कालं ममाग्रे स्थित्वा फलान्यक्रीत्वा न गन्तुमर्हथः । आगम्यतां यथाकामं च फलानि क्रीयन्ताम्' इति । तदनन्तरं तौ दारकौ भुजाभ्यां धृत्वा तेन विपणिपुरतः समाकृष्टौ । एतावता कालेन बहवो जनास्तत्र मिलिताः । 'किमपहृतं बटुभ्याम्' । 'अपि न दत्तं मूल्यं फलार्थे ।' 'कच्चित् ताडित आपणिक उपलैः ।' इति नानाविधैः स्वकपोलकल्पितप्रश्नैः कलहकारणं ते ज्ञातुमैच्छन् ।

अनेन कोलाहलेनाकृष्टचित्तो राजपुरुषोऽपि तत्र प्राप्तः। तं जनसम्मर्दं प्रविश्य स कांश्चिद् दण्डेनाताडयत्। अपरांश्चापशब्दैर्धिक्कृत्य कलिपुत्रमपृच्छत्। 'किं मुषितमेताभ्यां कुलाङ्गाराभ्याम् ?' इति। तच्छ्रुत्वा कनीयान् बटुः सक्रोधमवदत्। 'नावां चौरौ। न चापि कुलाङ्गारौ। एतादृशैर्निन्दाशब्दैर्यो नौ संबोधयति तं ताताय निवेदयामि।' इति। अन्यतरः कुमारो धीरोदात्तया गिराऽभाषत। 'अयि भो न्यायप्रिय नगरपाल, न किमपि चोरितमावाभ्याम्। राजपथेन गच्छन्तौ क्षणमात्रमत्र स्थित्वाऽग्रतश्चलितौ। अयं विपणिक आततायी भूत्वा नौ निरर्थकमधिक्षिपति रुणद्धि च।' इति। एतदाकर्ण्य कलिपुत्रो महताऽऽवेशेनाब्रवीत्। 'न निरूपितानि मे फलानि किं न वाऽऽघ्रातस्तेषां गन्धो युवाभ्याम्' इति। तदा स ज्यायान् दारको




व्याहरत्। 'भद्र, सत्यं तव वचनम्। तव फलानि आवाभ्यां निरीक्षितानि—तदर्थं त्वमावयोर्नाणकानि निर्वर्णयैतानि। [इत्युक्त्वा स हस्तगतं द्रव्यं तमदर्शयत्।] तव फलानां गन्धश्चावाभ्यामाघ्रातः—तदर्थमावयोर्नाणकानां

नादं त्वं शृणु ।' [ इत्युक्त्वा स नाणकानां झणझणितं नादमकरोत् । ] इति। इदं तस्य प्रज्ञावतो बटोर्विदग्धवचनं समाकर्ण्य विस्मिता अभवन् सर्वे जनाः। कलिपुत्रो राजपुरुषश्च कुण्ठितमती जातौ। अत्रान्तरे स्वकार्यसिध्यै द्रुतं प्रयातौ तौ कुमारौ ।

---

**प्रश्नाः**—कथं ग्राहकान् प्रतारयति कलिपुत्रः ? केन कारणेन रक्षापुरुषास्तस्य वश्याः ? किमर्थं कलिपुत्रस्य पुरतः स्थितौ कुमारौ ? कथं कलहः समारब्धः ? कीदृशः स्वभावो नगरपालकस्य ? कनीयान् बालः किमवदत् ? ज्यायान् बालः किमकरोत् ?

**वाग्विलासः**—दाक्षिण्यं स्वजने दया परिजने शाठ्यं सदा दुर्जने
प्रीतिः साधुजने नयो नृपजने विद्वज्जनेष्वार्जवम् ।
शौर्यं शत्रुजने नतिर्गुरुजने नारीजने धूर्तता
ये चैवं पुरुषाः कलासु कुशलास्तेषां हि लोकस्थितिः ॥ १ ॥

---

## बालचरो बालकृष्णः ।

अस्ति पुण्यपत्तनस्य प्रतीच्यां दिशि सुविशालं क्रीडाङ्गणम्। तत्रैकस्मिन् दिने कोऽपि बालचरगणो वनविहारार्थं सन्निविष्टः। दिवाकरो नाम पूर्वे वयसि वर्तमानोऽध्यापकस्तेषां नायकः। स प्रथमं तेषां बालचराणां व्यूहं रचयित्वा तान् शपथविधिमपाठयत्। ईश्वरविषयकं नृपविषयकं स्वदेशविषयकं च निजकर्तव्यं कीदृशं, सत्यभक्तिः कीदृशी, शुद्धाचारश्च कीदृशः—तत्सर्वं विस्तरेणाकथयत्। अनन्तरं व्यायामो यष्टिप्रयोगः पदचिह्नानुगमनं सन्देशहरणं ध्वजवाणी चेत्यादिकं कार्यक्रमं

समाप्य मध्याह्ने ते सर्वे भोजनार्थं महावटवृक्षमूल उपाविशन्। तत्र विनोदालापैश्च रुचिरकथाभिश्च रम्यविडम्बनैश्च मधुरगायनैश्च प्रज्ञाप्रवर्तक-क्रीडाभिश्च कियानपि कालस्तैर्महतोत्सवेन नीतः। अन्ततश्च जनहितं




कथं साधयितव्यं स्वावलम्बनं कथं संसेवितव्यं उद्योगप्रियता कथं व्यवहार्या, निर्मलत्वं कथमाचरणीयं शरीरबलं च कथं वर्धनीयं तदखिलं दिवाकरेण स्पष्टीकृतम्। सायंकाले धावनोत्पतनैर्मुहूर्तं विहृत्य सम्प्रदायसम्मतां च सङ्गीतसेवां सम्पाद्य ते सर्वे गृहं सम्प्राप्ताः।

तद्गणस्थो बालकृष्णनामा बालचरो गृहं प्रविश्य मातरं ससम्भ्रममवदत्। 'अम्ब, अद्य प्रभृति जनहितं मया कार्यम्। तस्माद् उत्साहवर्धकं शर्करोपयुतं च किमपि खाद्यं प्रयच्छ।'

**माता**—अयि वत्स, इमौ स्वादू अपूपौ पृथक् तव कृते रक्षितौ। कञ्चुकं शिरस्कं पादत्राणं चापनीय हस्तपादं च प्रक्षाल्य भक्षय तौ।

**बाल:**—[ कञ्चुकं, शिरस्कं, पादत्राणं चेतस्ततः प्रक्षिप्य ] कुत्र गता माला। किमर्थं सा मम वस्त्राणि यथास्थानं न निदधाति।

**माला**—[ सरोषम् ] नाहं तव दासी तथा कर्तुम्।

**बाल:**—बालचरोऽहं जनहिते व्यापृतः। तस्माद् मदीयं हितं त्वया गृहे साधयितव्यम्। श्वः प्रक्षालय मे वस्त्राणि सम्यक्।

**माला**—न कदापि। नरस्य कर्माणि नार्या न कार्याणि।—कुमारस्य कर्माणि कुमार्या न कार्याणि। इत्युपदिशन्ति विदुष्यः सम्प्रति। यादृशास्तवाधिकारास्तादृशा ममापि।

**बाल:**—यद्यपि त्वं नेदं मदीयं कर्म करोषि तथापि तव माता वा पिता वा करिष्यति। [ अपूपौ भक्षयति। ]

**माता**—मा विवदेथाम्। वत्सौ नैष कलहो युक्तः। अयि, माले त्वं गृहसम्मार्जनं कृत्वा सन्ध्यापात्राणि पूजासाहित्यं च संविधेहि। भो



बाल, त्वं नदीं गत्वा पानीयकुम्भमानय। यावदहं पाकसिद्धिं करिष्ये। सन्धिवातेन मे पादौ न प्रसरतः। दुःसहा चैतयोः पीडा।

**बालः**—[ गृहाद् बहिरुत्प्लुत्य ] नैतद् बालचरस्य कर्तव्यम्। नैतद् जनहितं नाम।

प्राङ्गणस्थान् प्रातिवेशिकान् दृष्ट्वा बालकृष्णस्तेभ्योऽखिलं विहारवृत्तान्तं वर्णितवान्। तदाकर्ण्य कोऽपि प्रतिवेश्योऽचिन्तयत् 'शुभेयं वार्ता। यष्टिप्रयोगाः शिक्ष्यन्ते। जनहितं चोपदिश्यते। अयं मूर्तिमान् राजद्रोहः। अधुनैव निवेदयामि दिवाकरमधिकारिणे। स्वनियोगे च पदोन्नतिं तेन साधयिष्ये।' इति। अपरः कश्चन प्रतिवासी मन्यते स्म। 'दिष्ट्या वर्धतेऽसौ राष्ट्रहितकारी शिक्षकः। एतादृशा गुणवन्तः प्रज्ञावन्तश्च गुरवो यदि प्रतिग्रामं विद्येरन् तर्हि देशोन्नतिः सुसाध्या भवेत्।' इति। अत्रान्तरे बालकृष्णमातुः सम्बोधनं सर्वेषां कर्णपथमायातम्। तच्छ्रुत्वा बालकृष्णेन प्रतिवचनं दत्तम्। 'बालचरोऽहं जनहिते दक्षः। न च ममैतादृशं कर्तव्यम्।' इति। तदा स प्रथमः प्रतिवेशी ब्रूते। 'साधूक्तं त्वया। गृहकर्म तावत् क्षुद्रम्। न चोन्नतिकरम्।' इति। ततः स द्वितीयः सामन्तोऽवदत्। 'नैतद्युक्तं बाल। जनहितं कथं कार्यं तद् गृहे शिक्षितव्यम्। मातुः पितुश्च सेवा प्रथमं सम्पादनीया। आत्मकार्याणि च यथाविधि यथाकालं च कृत्वा भ्रातॄणां भगिनीनां च साहाय्यं विधेयम्। अयं हि जनहितस्य प्रथमः पाठो बालैर्गृहे पठनीयः' इति।

---

**प्रश्नाः**—किं किं क्रियते बालचरैः? कीदृशी क्रीडा हितकरी? कीदृशः स्वभावो बालकृष्णस्य मालायाश्च? बालचरवर्णनं श्रुत्वा किमचिन्तयत् प्रथमः प्रतिवेशी किं च द्वितीयः?

**वाग्विलासः**—मनस्यन्यद् वचस्यन्यद् कर्मण्यन्यद् दुरात्मनाम् ।
मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् ॥ १ ॥
अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम् ।
सदा लोकहिते युक्ता रत्नदीपा इवोत्तमाः ॥ २ ॥

---

# निर्बन्धशीलस्य नीलकण्ठस्य ।

धारानगर्यां पश्चिमे वयसि वर्तमानौ कौचिद् वैश्यदम्पती अवसताम् । सम्पत्तिविपुलत्वे सुखसर्वस्वसुलभेऽपि सन्तत्यभावात् सखेदमेव तयोर्जीवनम् । अपत्यप्राप्त्यै नानाविधानि व्रतानि ताभ्यामाचरितानि, दानानि दत्तानि, तीर्थानि संदृष्टानि, देवताः पूजिताः, साधवश्च सेविताः । अचिराच्च सफलोऽभवत् तयोर्मनोरथः । यस्य कस्यापि प्रसादात् पुण्यनिचयाद् वा पुत्ररत्नं तयोर्जातम् । तस्मिन् मङ्गलदिने महानुत्सवः समभवत् तस्यां नगर्याम् । अन्नदानेन वस्त्रदानेन धनदानेन गोदानेन च सर्वे जनाः सन्तोषितास्तेन वैश्येन । तस्य शिशोः सर्वेऽपि धर्मसंस्कारा यथाविधि सम्पादिताः । त्रयोदशे दिने च नीलकन्ठ इति तस्य नामाभिधानं कृतम् । शुक्लपक्षे यथा शशी कलावर्धमुपचीयते तथैव स शिशुर्मातापित्रोः सौख्येन सहावर्धत दिने दिने । सर्वेषां च प्रीतिपात्रमजायत ।

गच्छता कालेन नीलकण्ठः पञ्चवर्षदेशीयोऽभवत् । यद् यद् स इच्छति तत् तत् सर्वैरनुष्ठीयते स्म । न च किंचिद् अप्राप्यं नाम तस्य धनिकदारकस्य । अनेन क्रमेण निर्बन्धशीलो जातो नीलकण्ठः । 'त्वया न कर्तव्यं तद्' इति कथिते सति सोऽवश्यमेव तत् कर्तुं प्रायतत । तेन च कदाचिद् दुःखमन्वभवत् । 'पङ्कपूर्णेन मार्गेण धावनं न योग्यम्' इति

प्रबोधनमगणयन् स बहुवारं दण्डवद् भूमौ पतितः। 'शर्करायुतं मोदकं भक्षयित्वा मुखप्रक्षालनं कार्यम्' इत्युपदेशमुपेक्षमाणः सोऽसकृद् मधुमक्षिकाभिः संदष्टः। 'अग्निशलाकाभिः क्रीडा नोचिता बालानाम्' इति शासनं विस्मरन् स एकदा प्रज्वलितवस्त्रोऽभवत्। रक्षितश्च महताऽऽयासेन निकटवर्तिनाऽनुचरेण।

अथ कदाचिद् हयवत् सेवकमारोढुं नीलकण्ठस्य मतिर्जाता। त्वरितमेव च तस्य पृष्ठे समारुह्य स प्राङ्गणेऽक्रीडत्। अनेन क्रमेण परपृष्ठारोहणे सञ्जातरुचिः स एकदा पितरमगच्छत्। 'तात, तव पृष्ठमारोढुमिच्छामि' इत्यवदच्च। तत्र बहवो धनिका नगरनायका आसनस्था आसन्। कमपि गुर्वर्थमुद्दिश्य च विचारणा प्रावर्तत। बालकवचः श्रुत्वा स वैश्योऽब्रवीत्—'अयि वत्स, वयस्यपृष्ठमारोह। व्रज प्राङ्गणम्। वयं सर्वे सुमहत्सु कर्मसु व्यापृताः।' इति। तदा स कुमार उच्चैराक्रोशत्—'न हि न हि। तवैव पृष्ठमारोहामि। अश्ववत् त्वमितस्ततो धाव।' इति। तस्येमं दुराग्रहं ज्ञात्वा सर्वेऽपि ते नागरिका आहुः—'क्रियतां यदिच्छति बालः। न हि सुतसन्तोषाद् अन्यत् प्रेयो गृहमेधिनाम्।' इति। अत्रान्तरे नीलमाता क्रन्दनाकृष्टा वासगृहगवाक्षमागत्य सकुतूहलमात्मजचेष्टा अपश्यत्। तदा तत्रैव स वृद्धवैश्यो भूमिगतजानुकरो मण्डपे तुरङ्गवद् इतस्ततोऽचरत्। नीलकण्ठश्च सोल्लासं तस्य पृष्ठमारूढस्तं कशाभिरताडयत्।

दिनेषु गच्छत्सु दैवदुर्विपाकात् स वैश्यो निर्धनः संवृत्तः। कथं कथंचिद् वृत्तिमकरोत्। नीलकण्ठस्तु वैभवजातरुचिः प्रतिनिविष्टो यथापूर्वमवर्तत। पितृदारिद्र्यं न तस्य बुद्धिग्राह्यम्। दुर्गतावपि तौ वैश्यदम्पती तस्य प्रियं यथाशक्ति साधितवन्तौ। अथ कदाचिद् 'हैमतन्तुरचितं शिरस्कं मम जन्मदिनेऽद्य क्रेतव्यम्'। इति सनिर्बन्धमवदद् नीलकण्ठः। 'न वयमधुना धनिकाः। महामूल्यं च तादृशं शिरोभूषणम्। नोचितोऽयमाग्रहः।' इति




भूयो भूयः समुपदिष्टोऽपि स तत् पितृवचनं नामन्यत । प्रमुक्तकण्ठं सोरस्ताडनं सकेशलुञ्चनं सभूमिलुंठनं च रोदितुमारभत । एतद् दृष्ट्वा प्रज्ञाधनो नाम कश्चिद् निकटवासी तत्रागच्छद् । नीलकण्ठं चाब्रवीत् । 'आगच्छ मया सह विपणिं नील । सुवर्णसूत्रसारं शिरस्त्राणं ददामि तुभ्यम् । पश्यैतद् रूप्यकदशकम् ।' इति । एतदाकर्ण्य सानन्दमुदपतत् स दारकः । प्रज्ञाधनेन सार्धं च राजमार्गेण प्राचलत् ।

अचिरेण कोऽपि क्षीणकायः पङ्गुस्ताभ्यां दृष्टः। वीथिपार्श्वस्थः स हस्तं प्रसार्य द्रव्यमयाचत। प्रज्ञाधनस्तमवदत्। 'पश्य रे पङ्गो दशरूप्यका वर्तन्ते मे हस्ते। परं तदंशोऽपि न देयस्तुभ्यम्। यतः किल तैः क्रेतव्यं शिरस्कं नीलकण्ठाय।' इति। तेन बालकेन दृष्टं श्रुतं चैतत् सर्वम्। कियदप्यनन्तरं यावदग्रे तौ गच्छतस्तावत् काचन जन्मान्धा स्त्री 'शीतनिवारणार्थं वस्त्रं दीयताम्' इति याचमाना तयोर्दृष्टिपथमायाता। तस्याः समीपमागत्य प्रज्ञाधनोऽब्रवीत् 'हे जन्मान्धे आकर्णय मे वचनम्। अयं बालो नीलकण्ठः काञ्चनगुणयुताय शिरोवेष्टनाय स्पृहयति। तदर्थमेते दशरूप्यका मे हस्तगताः। तव कृते वस्त्रमादातुं नाल्पोऽपि तद्भागो विनियोज्यः' इति। सत्वरं सोऽग्रतोऽगच्छत्। एतत् सर्वं पश्यन् नीलकण्ठः क्षणं मन्दायमानः किमपि वक्तुमैच्छत्। तं हस्तेनाकृष्य प्रज्ञाधन आह—'आगच्छ, नील। नात्र चिरायितुमर्हसि' इति। अचिरेण कौचिद् दरिद्रबालौ तयोः पार्श्वतः प्राधावताम्। किंचिद् भक्षणार्थं




च प्रार्थयेताम्। कठोरवचसा प्रज्ञाधन आक्रोशत्। 'ननु मूढौ, किं देयं

युवाभ्याम् । एते दशरूप्यका नीलशिरस्कार्थम् । सुशीलोऽयं नीलः कनकमयं शिरोवस्त्रमीहते । गम्यतां यत्र कुत्रापि याच्यतां च कोऽपि दयाशीलः' इति । निर्बन्धपरौ तौ बालयाचकौ पुनरप्याहतुः ' हे दयालो, दीयतां किमपि खाद्यम् । निराहारौ त्रिषु दिनेषु निराश्रयौ चावाम् । भोः करुणामय नील–।' इत्यर्धोक्ते प्रज्ञाधनः परुषमुद्घोषयत्–' मा तावत् । नास्ति करुणा नीलस्य वा कस्याप्यन्यस्य चेतसि युष्मदर्थे । आयाहि नील, नैतौ वीक्षणार्हौ याचकापसदौ । शिरस्कापणिः समीपे वर्तते । ' इति । साश्रुलोचनो नीलकंठोऽस्फुटमगदत् । ' मातुल, न मे स्पृहा शिरस्काय । अर्पय किमप्यशनं बालभिक्षुभ्याम् ।' इति । एतद् निशम्य प्रज्ञाधनोऽभणत् । ' साधु, वत्स, साधु । अयमेव शोभनः क्रमः । एहि । पण्यगृहात् अपूपानादाय त्वं स्वहस्तेन ताभ्यां प्रयच्छ ।' इति । नीलकण्ठेन तथा कृते सति तौ दरिद्रबालौ तद्भक्षणेन सन्तृप्तौ । तयोः सन्तोषाद् नीलोऽपि पर्याप्तकामः संवृत्तः । ततः परं निर्बन्धशीलो नीलकण्ठो विवेकशीलोऽभवत् ।

---

**प्रश्नाः**—केन कारणेन निर्बन्धशीलो जातो नीलकण्ठः ? प्रवयसां प्रबोधनमवगणय्य किमनुभूतं तेन ? कस्मिन् दिने स शिरस्कमैच्छत् ? कस्मात् कारणाद् आर्द्रीभूतं तस्य चित्तम् ? कथं ' प्रज्ञाधन' इति तस्य प्रातिवेशिकस्य नामान्वर्थम् ?

**वाग्विलासः**—सज्जनस्य हृदयं नवनीतं
यद् वदन्ति कवयस्तदलीकम् ।
अन्यदेहविलसत्परितापात्
सज्जनो द्रवति नो नवनीतम् ॥ १ ॥

---

# कूपे पतिता पाञ्चाली ।

'भो भोः पथिकाः, त्वर्यतां त्वर्यताम्। कूपे पतिता मे पाञ्चाली क्षणादेव जलमग्ना भविष्यति। कृपया बहिरानीयतां सा वराकी'। इति सकरुणं सोद्वेगं चाक्रोशत् सुमती। राजपथेन चलन्तो बहवो जना आसन्। तेषां केचिदमन्यन्त 'भ्रान्तचित्ता काऽप्येषा कुमारी सोन्मादं प्रजल्पति।' इति। अन्ये केचन 'विवदमाना एतादृश्यो हतबुद्धयः कन्यका इत्थं सर्वदा जनान् परितापयन्ति' इत्यतर्कयन्। बहुवारं 'परित्रायतां परित्रायताम्' इत्याक्रोशन्त्याः सुमत्याः साहाय्यार्थं न कोऽपि प्राप्तः। अनन्तरं तद्दुःख-दुःखितः कश्चिद् युवा तामुपगम्याब्रवीत्। 'कुत्रास्ति स कूपः। किंचित् साहाय्यं करिष्यामि। अन्यं कमप्याहूय कूपं प्रवेष्टुम्' इति।

तत एको रक्षापुरुषः समीपमागत उक्तवांश्च। 'किंनिमित्तमेष आक्रोशो नष्टमते। वृथा क्लिश्नासि जनान् स्वोरस्ताडनेन। किं करोषि रे नराधम। एनां बालामपहर्तुं प्रयतमानो दृश्यसे। त्वयैव प्रायोऽस्याः पाञ्चाली कूपे प्रक्षिप्ता। बहिरानय तां नोचेत् त्वां कारागृहं प्रवेशयामि।' इति। 'कूपजले निमज्जति मे पाञ्चाली। परित्रायतां परित्रायताम्।' इति सुमत्यरोदीत्। अत्रान्तरे कश्चिद् भिषग्वरः सुमत्याः क्रन्दनं श्रुत्वाऽचिन्तयत् 'अद्य तावद् विनाऽऽयासं रुग्णः प्राप्यते चिरात्। तदत्रैव क्षणं प्रतीक्षे। वाप्या उद्धृताऽसौ कन्या नूनं मदीयोपचर्यामपेक्षेत। ततश्च कियदपि द्रव्यार्जनं भवेद्।' इति।

एतावता कालेन सुमत्या विलापमाकर्ण्य बहवो जनास्तत्र मिलिताः। 'का पतिता'। 'कुत्र पतिता।' 'कथं पतिता।' 'कदा पतिता'— 'केन पातिता'। इत्यादीन् प्रश्नान् पृच्छन्तः परस्परं च कूपमवतर्तु-मुपदिशन्तोऽतिष्ठन्। नैकोऽपि नेतृत्वं निदर्शयितुमैच्छत्। तेषु द्वौ न्याय-




निपुणावभिभाषकौ मिथः कलहायमानौ परुषमाहतुः—'अहं प्रथममागतोऽत्र। मयैवायं न्यायविधिः साधनीयः।' इति। 'कुलक्रमागतो ममायं धर्मव्यवहारः। परिचिताश्च मे सर्वे जना एतत्कुलस्थाः। न प्रयोजनं ते सान्निध्येन'। इति।

अन्यत्र च केचन वार्ताप्रचारकाः 'मयैव प्रथममिदं वृत्तं प्रकाशनीयम्' इत्यहमहमिकया तां व्याकुलीभूतां कुमारीं बहुविधैः प्रश्नैः समक्षोभयन्। तत्स्थलस्य छायाचित्रं च प्रतिपत्तुं प्रायतन्त। न च पुनः कोऽपि कूपगतायाः पाञ्चाल्या उद्धरणं मनस्यकरोत्।

'वाप्यां प्रभ्रष्टा मे पाञ्चाली प्रलुप्यते। परित्रायतां परित्रायताम्' इति पुनश्च सुमल्याक्रन्दत्। अस्मिन्नेव क्षणे कश्चिद् बालवीरस्तत्रायातः। जन-

मण्डलं कथंचिद् विभिद्य निजभगिनीं सोऽवदत् । 'अयि जाते, किंनिमित्तोऽयं व्याक्रोशः ?' इति । नवदुःखोद्वेगेनाकुलीभूता सुमती




तमाह—'आर्य, कूपे पतिता मे पाञ्चाली निमज्जति। सत्वरं बहिरानय तां कृपया ।' इति । तत्क्षणमेव वस्त्राण्यपनीय कूपतलमवातरद् स बालवीरः । क्षिप्रं चोदहरत् पटनिर्मितं जलक्लिन्नं वितस्तिमात्रमेकं क्रीडनकम् । तद् गृहीत्वा सानन्दं सोल्लासमुदपतत् सुमती । 'दिष्ट्या, कुशलिनी मे पाञ्चाली क्षेमेण प्रतिनिवर्तिता' । इत्यगदच्च बहुवारम् ।

एतद् दृष्ट्वा निराशाभिभूताः केचिद् विनोदनिर्भराः केचन लज्जावनत-मुखाश्चान्ये जना यथागतं प्रयाताः ।

---

**प्रश्नाः**—किमिति सुमती सहसैवाक्रोशत्? तस्या आक्रोशं श्रुत्वा किमचिन्तयन् समीपस्था जनाः? कीदृशः स्वभावो रक्षापुरुषस्य? किमर्थं तत्र मिलिता भिषग्वरोऽभिभाषकौ च? केन कारणेन वार्ताप्रचारकास्तत्रायाताः? केनोद्धृता पाञ्चाली?

**वाग्विलासः**—किमप्यस्ति स्वभावेन सुन्दरं वाऽप्यसुन्दरम्।
यदेव रोचते यस्मै भवेत् तत्तस्य सुन्दरम्॥ १॥
आशायाः परमं दुःखं निराशा परमं सुखम्।
आशार्तो दुःखमाप्नोति परत्रेह च मानवः॥ २॥

---

# अस्पृश्यतानिरासः।

सप्तपुर्यां वनिताविद्यालयस्य द्वारदेशे कस्याप्यागमनं प्रतीक्षमाणा द्वादशवर्षा काचन कुमारी सायंकालेऽतिष्ठत्। कियताऽपि कालेन नववर्षीयः कश्चिद् दारकः प्लवनमय्यैव गत्या तत्रागच्छत्। तं सा कन्याऽवदत्—'अयि विद्याधर, किमिति चिरायितं त्वयाऽद्य।' इति।

**विद्याधरः**—कोऽपि महर्षिरायातः पाठशालाम्। प्रवचनप्रसङ्गेन सोऽकथयत्—"अस्पृश्यता दूरीकरणीया। न कोऽप्यस्पृश्यः समाजे वर्तते। सर्वे जनाः प्राणिनश्च स्पृश्या एव"—इति। तेन व्याख्यानेन महानुत्साहो जातो मे मनसि। अयि आर्ये, त्वां दर्शयाम्यस्मिन्नेव क्षणे तस्य प्रभावम्।

**पद्मावती**—मा तावत्। न युक्तं सम्भ्रमाचरणं ते। स्थिरचित्तो भव मुहूर्तम्।

अत्रान्तरे समीपे धेनुं दृष्ट्वा तां हस्तेन स्प्रष्टुमधावद् विद्याधरः। सा च महान्तं फूत्कारं कृत्वा तं शृङ्गेण प्रहर्तुं सिद्धाऽभवत्। पद्मावत्याः प्रत्यादेश-

मुपेक्षमाणः सोऽग्रतो गर्दभसंपर्केच्छया वेगेनोदप्लवत्। तमुपगच्छन्तं लत्ताप्रहारेण ताडयितुं स पशुः पश्चिमपादौ निक्षिप्तवान्। तदा त्वरयोत्पत्य




विद्याधरस्तस्य मस्तकमस्पृशत्। तस्मिन्नेव क्षणे स रासभो महान्तं चीत्कारं कृत्वा तस्य शिरस्कं च दन्तैरादाय सुदूरं जवेन प्रणष्टः! तेन किंचिद् व्रीडाऽभिभूतः स बालकः पद्मावत्या हस्तेन धृत उक्तश्च—'मा मैवम्। अलमुन्मत्तचेष्टितेन। किं भणत्यम्बा। शीर्षभूषणविहीनं त्वां तातो दूषयति। पश्य, मार्गस्था इमे बालकास्त्वां निर्भर्त्सयन्ते'। इति।

**विद्याधरः**—न गणयामि तान् वा तेषां निन्दां वा। अस्पृश्यतानिरासः कर्तव्यः प्रयत्नतः।

अस्मिन् क्षणे स पुरत एकं यवनं मातङ्गीं ब्राह्मणीं चापश्यत्। सहसोत्क्षेपेण भगिनीहस्ताद् उन्मुक्तः सोऽस्पृश्यतानिवारकस्तान् सर्वानस्पृशत्। ब्राह्मणी तमवदत्–'अलमेतेन चापलेन'। इति। मातङ्गी तं धृत्वा तस्य निचोलमपाहरत्। यवनश्च तं मुष्टया परुषं प्राहरत्।

एतद् वीक्ष्य भृशं दुःखिता पद्मा सबाष्पमवदत्—' मा ताडय मे दुर्विनीतं वत्सम्' । इति । अनेनोद्भ्रमप्रवृत्त्या सर्वे च ते रथ्यागता जना विस्मिता अभवन् । बहवः कुक्कुरा भषणपरास्तं कुमारमन्वधावन् ।




पुनरपि विद्याधरं करेण गृहीत्वा पद्मा सस्नेहमाह—'विरम, वत्स, एतस्मात् कुचेष्टितात् । सुविनीतो भव । पश्य समीपेऽस्मद्गृहं विद्यते । तत्र मञ्चस्था माता —' । इत्यर्धोक्ते विद्याधरो वेगेनोत्प्लुत्य गृहं प्राविशत् ।

स स्वैरं सर्वान् स्पृशेद् इति शङ्कया पद्मा तारस्वरेणाक्रोशत् । 'अयि अम्ब, अशुचिर्विद्याधरः—गर्दभेन मातङ्ग्या च स्पृष्टः—त्वां स्पृशेत् । देवगृहं वा प्रविशेत् पितामहं च—' इति कृच्छ्रेण क्रन्दन्त्याः पद्मावत्याः सोऽस्पृश्यतानिरासकृ ऋतुमतीं मातरं देवगृहगतं पूजनपरं पितामहं पाकशालास्थां च सूपकारीं क्रमेण स्पृशन् इतस्ततोऽधावत् । 'निरस्ताऽस्पृश्यता, निरस्ताऽस्पृश्यता' इति चोच्चैरुदघोषयत् । तदर्थं च स दुर्दान्तः पितामहेन भृशं ताडित इति न कथनीयं नाम ।

---

**प्रश्नाः**—किमुपदिष्टं तेन महर्षिणा? कः परिणामो जातो बालमनसि? कमस्पृशद् विद्याधरः प्रथमम्? को वा तस्य हेतुः? कीदृशः स्वभावः पद्मावत्याः। गृहं दृष्ट्वा किमर्थं पुरतोऽधावद् विद्याधरः?

**वाग्विलासः**—दुरधीता विषं विद्या देशनाऽनधिकारिणे ।
सम्भ्रमाचरणं तस्य परिणामो भवेद् ध्रुवम् ॥ १ ॥

---

# शब्दकोषः



ट्म्—key.
लम्—skirt.
म—base.
क्षिप्—to abuse.
यापिका—lady teacher.
ध्यायः—holiday.
रोपित – not planted.
वृत – open.
कृत – imitated.
रोधेन – accordingly.
ष्ठित – done.
नुसृत – followed; copied.
न्ततः – lastly.
न्वेषणम् – searching.
कारः – harm; offence.
रिचित – new; unknown.
सद – wretched.
पूपः – cake; biscuit.
भिनन्द् – to congratulate.
भिनयः – acting; gesture.
भिपत् – to attack.
भिप्रायः – object; aim.
भिभाषकः – pleader.
भिभूत – overpowered.
भिलाषः – desire.
म्बा – mother.
र्द् – to tease.
– to deserve.
लक्तः – red ink
लीक – false.

अव्यभिचारिणी – sure; steady.
अंशः – part.
अशुचि – dirty.
अस्पृश्य – untouchable.
अस्पृश्यता – untouchability.
अहमहमिका – competition.
आक्रम् – to cross; overtake.
आततायिन् – aggressor.
आत्मजः – son.
आदौ – at first.
आपणः – } shop; bazaar.
आपणिः – }
आपृच्छ् – to take leave.
आम्रम् – mango.
आयासः – trouble; strain.
आलयः – house; temple.
आलेख्य – drawing.
आसक्तिः – fondness.
आसद् – to find out.
आसीन – seated.
ईप्सित – desired.
ईर्ष्यी – jealous.
उचित – proper.
उच्छिष्ट – used; tasted.
उत्कण्ठा – eagerness.
उत्कोच – bribe.
उन्मत्त – senseless; wild.
उपकरण – means.
उपचर्या – medical treatment.
उपन्यस्त – proposed.

उपलः – stone.
उपहास्यता – ridicule.
उरस् – breast.
ओजस् – lustre.
कञ्चुकम् – coat ; boddice.
कनकम् – gold.
कनीयस – younger.
कर्ष् – to draw.
कला – art ; phase.
कलिः – quarrel.
कशा – whip.
काञ्चनम् – gold.
कापुरुषः – worthless man.
कामः – desire.
कायः – body.
कारागृहम् – prison.
किङ्किणिकम् – anklet.
कुक्कुरः – dog.
कुण्ठितमतिः – silenced.
कुलाङ्गारः – rogue.
कुशालिनी – safe.
कूटतुला – false scales.
कूपः – a well.
कृच्छ्रेण – wearily.
कोटीः – end.
कोलाहलः – noise; row.
क्रन्द् – to cry.
क्रयिन् – buyer.
क्री – to buy.
क्रीडनम् – } toy.
क्रीडनकम् – } plaything.
क्रीडारङ्गः – circus.
क्लिन्न – wet.
क्लिश् – to tease.
क्षण् – to scratch.
क्षिप्रम् – soon.
क्षीण – weak ; lean.
क्षेमेण – safely.
गण् – to count ; to care for
गवाक्षम् – window.
गुणः – merit ; thread.
गुर्वर्थः – important topic.
गोपन – hiding.
ग्राहकः – customer.
घर्मः – sweat.
घूर्णन – turning.
घृणा – censuring.
चकित – wonderstruck.
चपल – restless.
चर्मन् – skin.
चापलम् – mischief.
चि – to collect ; ( उप ) to g
चित्तदाहः – mental troub
चिरात् } – after a long tim
चिरेण }
चिरायित – delayed.
चीत्कारः – harsh sound.
चुल्ली – oven.
चेष्टा } – action ; deed.
चेष्टित }
छायाचित्रम् – photograph.
जम्बीरम् – peach.
जल्प् – to prattle.
जवः – speed ; force.
जात – born ; dear.
जानु – knee.
जाम्बवम् – blue berry.

ज्योत्स्ना – moonlight.
तर्ज् – to frighten.
तातः – father.
तारस्वरः – loud voice.
तुद् – to tease.
तुरगः – } horse.
तुरङ्गः – }
तुला – balance; scale.
तूष्णीम् – silently.
त्वर् – to hasten.
दग्धमुखी – wretched.
दम् – to control.
दम्पती – couple.
दयाकुलित – moved with pity.
दाक्षिण्य – straightforwardness.
दाडिमम् – pomegranate.
दारकः – boy.
दिष्ट्या – happily.
[illegible]राग्रहः – obstinacy.
[illegible]र्गत – poor.
दु[illegible] – unruly.
दुर्विनीत – mischievous.
दुर्विपाकः – bad turn.
दू[illegible] – to blame.
देशना – advice.
देशीय – old.
द्राक्षा – grape.
द्रुतम् – quickly.
धिक्कृत – censured.
धुर् – yoke.
धृ – to hold; wait.
ध्वजः – flag.
[illegible]नीतम् – butter.
[illegible]ः – stupid.

नायकः – leader; master.
नारङ्गम् – orange.
निचयः – store.
निचोलः – coat.
निभृतम् – stealthily.
निमग्न – drowned; busy.
नियोग – post; order.
निरासः – removal.
निरीक्षित } – observed.
निरूपित }
निरुद्ध – blocked.
निर्बन्धः – insistence.
निर्भर्त्सित – censured.
निर्भर – full.
निर्वर्ण – to observe.
निर्वासय् – to drive out.
निर्हेतुकम् – aimlessly.
निशम्य – hearing.
नूनम् – really.
नेतृत्वम् – leadership.
न्यग्रोधम् – fig.
न्यायः – law; justice.
पङ्कः – mud.
पङ्गुः – lame man.
पटः – cloth.
पण्यशाला – पण्यगृहम् – shop.
पथिकः – traveller.
पथिन् – road; way.
परित्रायताम् – help.
परुषम् – harshly.
पर्याणम् – saddle.
पर्याप्त – obtained; enough.
पाकः – cooking.

पाञ्चाली – doll; toy.
पानीयम् – water.
पापभाक् – sinner.
पारितोषिकम् – reward ; prize.
पार्श्वः – side.
पुङ्गव – great; best.
पेषणम् – grinding.
पौरुषम् – valour.
प्रज्ञा – talent.
प्रणष्ट – disappeared.
प्रतारणा – deceiving.
प्रतिनिविष्ट – self-willed.
प्रतीकम् – idol.
प्रतीक्ष् – to wait.
प्रतीची – west.
प्रभाव – force.
प्रलुप् – to destroy.
प्रसादः – gift; boon.
प्राङ्गणम् – square.
प्रातिवेशिकः neighbour.
प्राप् – to get.
प्रेयस् – desirable ; pleasing.
प्लवनम् – jump.
प्लु ( उद् ) – to jump.
फूत्कारः – hiss.
बटुः – boy.
बालचरः – बालवीरः – scout.
भण् – to say.
भषणम् – barking.
भाण्डम् – pot; vessel.
भावना – feeling; idea.
भाययति – frightens.
भिषक् – doctor.
भूतम् – animal.
भूपुटकम् – groundnut.
भूमिका – part.
भृशम् – exceedingly.
भेकः – frog.
भ्रष्ट – fallen.
मञ्चः – gallery; bed.
मणिमाला – necklace.
मण्डलम् – circle.
मधुमाक्षिका – bee.
मन्दायमान – lingering.
मसी – ink.
महर्षिः – sage.
महानसम् – kitchen.
मातङ्गः – elephant; untouchable.
मातुलः – maternal uncle.
मिथः – mutually.
मुषित – stolen.
मोहपाशः – temptation.
यथार्थम् – properly.
यवनः – mahomedan.
यशस् – fame ; success.
याच् – to beg.
याचकः – beggar.
युज् – to use; suit.
रङ्गनायकः – ring-master.
रक्षापुरुषः – policeman.
रथ्या – street.
रश्मिः – reins; ray.
रंहस् – speed.
राजद्रोहः – treason.
रासभः – ass.
रुग्णः – patient.

रुचि – taste; liking.
रुध् – to stop.
लज्जा – shame.
लत्ता – kick.
ललित – soft; attractive.
लाङ्गूलम् – tail.
वञ्च् – to cheat.
वनिता – woman.
वयस्यः – friend.
वरः – best ; boon.
वराक – helpless.
वलयम् – ring.
वश्य—वशीकृत – won over.
वाग्विषम् – harsh words.
वाजी – horse.
वापी – a well.
वार्ताप्रचारकः – news-agent.
विजन – lonely.
विडम्बन – mocking.
वितस्तिः – span.
विदग्ध – clever.
विदुषी – learned woman.
विनोदः – joke.
विपणिः – shop.
विपरीत – opposite ; wrong.
विप्रलम्भः – trick; deceit.
विमल – pure ; simple.
विरम् – to stop.
विलम्बेन – late. ( विलम्बात् ).
विलसत् – growing ; shining.
विलापः – crying.
विश्वासभाजनम् – trustworthy.
विषादः – grief.
वीक्ष् – to see.
वीक्षणार्ह – worth seeing.
वीथिः – street.
वृ – to choose.
वृकः – wolfe.
वृत्तम् – incident ; news.
वृत्तिः – livelihood.
वैदग्ध्यम् – skill.
वैभवः – wealth ; pomp.
वैश्यः – merchant.
व्यपदेशः – trick.
व्यवसायः – occupation.
व्यापृत – occupied.
व्रज् – to go.
व्रीडा – shame.
शकटः – cart ; car.
शकलः – piece.
शठः – rogue.
शपथः – vow ; oath.
शाठ्यम् – roguery.
शिक्ष् – to teach ; to learn.
शिरस्कम् – head-dress.
शीर्षम् – head.
शुनकः – dog.
श्रेयस् – desirable ; better.
सत्त्वम् – essence; animal.
सन्ततिः – issue; child.
सबाष्पम् – with tears in eyes.
सम्पर्कः – touch.
सम्पादय् – to secure.
सम्प्रदायः – tradition.
सम्भृत – stocked.
सम्भ्रमः – confusion ; haste.

सम्मर्दः – crowd–( समवायः )
संरुद्ध – stopped.
सरोषम् – angrily.
संवत्सरः – year.
संविधेहि – arrange.
सव्याजम् – cunningly.
सस्यम् – crop.
सह् – to bear.
सहाध्यायी – class-fellow.
साध् – to go; to accomplish.
सान्त्वित – appeased.
सान्निध्यम् – nearness.
सापत्न – step-motherly.
सामन्तः – neighbour.
सारमेयः – dog.
सावधानम् – attentively.
सुवर्णपुष्पम् – golden flower.
सुहृद् – friend.
सूपकारी – cook.
सोद्वेगम् – painfully.
सोन्मादम् – senselessly.
सोल्लासम् – cheerfully.
सौष्ठवम् – beauty.
स्थविर – old; aged.
स्थाली – pan.
स्निह् – to love.
स्पृह् – to desire.
स्फुटम् – clearly.
स्वद् – to taste.
स्वसृ – sister.
हयः – horse.
हितकाम – favourable.
हेमन् – gold.
हैमतन्तु – gold thread.
ह्रेपित – censured.

